# संस्कृतवार्ताः

दिनांक 0६-११-२०२०

प्रातः ०६:५५

प्रातस्तन्यो वार्ताः

प्रवाचिकानुवादिका च मुदिता वेतालः

## मुख्यवार्ताः

प्रधानमन्त्री नरेन्द्रमोदी अद्य इटली देशस्य प्रधानमन्त्रिणा गुसेपे कोंटे इत्यमुना साकं द्विपक्षीयशिखरोपवेशने सहभागित्वं करिष्यति।

प्रधानमन्त्री नरेन्द्रमोदी प्रावोचत् यत्  सुदृढं जीवन्तं च भारतं वैश्विकार्थिकस्थितौ स्थिरताम् आनेतुं योगदानं कर्तुं क्षमते।

बिहारविधानसभानिर्वाचनेभ्यः तृतीयान्तिम-चरणात्मकं प्रचाराभियानं पूर्णताङ्गतम्। मतदानं शनिवारे भविष्यति।

भारते कोविड-सङ्क्रमणात् स्वास्थ्य-लाभ-मितिः समेध्य द्विनवति-दशमलव-द्वि-शून्य-प्रतिशन्मिता सञ्जाता। स्वास्थ्य-मन्त्रालयेन विदेशेभ्यः प्रत्यागतेभ्यः यात्रिभ्यः नूतनदिङ्-निर्देशाः

प्रख्यापिताः।

अमरीकायां राष्ट्रपतिर्वाचनस्य महत्त्वपूर्णराज्यानां परिणामोद्घोषणायाः प्रतीक्षा विधीयते।

अपि च

आई.पी.एल. क्रिकेटस्पर्धामालिकायां गतरात्रौ क्रीडिता स्पर्धा मुम्बई-इण्डिन्स् दलेन विजिता। अनेन सहैव मुम्बई-इण्डियन्स् दलं निर्णायकचक्रे प्रविष्टम्।

प्रधानमन्त्री इटली - प्रधानमन्त्री नरेन्द्रमोदी अद्य इटली देशस्य प्रधानमन्त्रिणा गुसेपे कोंटे इत्यमुना साकं द्विपक्षीयशिखरोपवेशने सहभागित्वं करिष्यति। दृश्याङ्कनमाध्यमेन आयोजयिष्यमाणे अस्मिन् उपवेशने उभौ नेतारौ द्विपक्षीयसम्बन्धेषु महत्त्वपूर्ण-क्षेत्रीय-वैश्विक-विषयेषु च  विस्तारेण चर्चां करिष्यतः। अत्रावसरे नैकानि सन्धिपत्राणि हस्ताक्षरैः प्रमाणीकरिष्यन्ते।

प्रधानमन्त्री - प्रधानमन्त्री नरेन्द्रमोदी प्रावोचत् यत्  सुदृढं जीवन्तं च भारतं वैश्विकार्थिकस्थितौ स्थिरताम् आनेतुं योगदानं कर्तुं क्षमते। गत सायं निवेशकानां विश्वस्तरीयान्तर्जालीयोपवेशनस्य अध्यक्षतां निरवहन् श्रीमोदी अकथयत् यत् भारतं वैश्विक-विकासस्य  प्रेरकशक्तिं विधातुं यत्सम्भवं भविष्यति भारतं  तत् करिष्यति। भारतं तत् स्थानं विद्यते यत्र निवेशकाः

विश्वसनीयतया लोकतन्त्रेण स्थिरतया निरन्तरतया प्रदूषण-मुक्त-विकासेन च साकं लाभमपि प्राप्स्यन्ति। आत्मनिर्भर-भारतनिर्माणं केवलं परिकल्पना नास्ति अपितु निश्चितार्थिकरणनीतिः विद्यते। अमुनोक्तं यत् अस्याः रणनीतेरुद्देश्यम् उद्यमिनां क्षमतायाः श्रमिकाणां कौशलोपयोगं च विधाय भारतनिर्माणस्य वैश्विक-केन्द्रत्वेन स्थापनं विद्यते।

बिहार-विधानसभा-निर्वाचनम् - बिहार-विधानसभा-निर्वाचनेभ्यः तृतीयान्तिम-चरणाय प्रचाराभियानं गतदिने समाप्तिङ्गतम्। अस्मिन् चरणे अष्टसप्ततिः निर्वाचनक्षेत्रेषु शनिवासरे मतदानं भविष्यति। पश्चिम-चंपारण-जनपदस्य वाल्मीकि-नगर-लोकसभा -निर्वाचन-क्षेत्रस्य उपनिर्वाचनाय अपि मतदानं शनिवासरे एव भविष्यति। अस्मिन् चरणे पञ्चत्रिंशल्लक्षाधिक-द्विकोटि मतदातारः चतुरोत्तर-द्वि-शताधिकैक-सहस्र-प्रत्याशिनां भाग्यस्य निर्णयं करिष्यन्ति।

कोविड-स्थितिः - भारते सप्त-सप्ततिः लक्षाधिक-जनाः कोविड-महामारीं पराजित्य आरोग्यं प्राप्तवन्तः। कोविड-नवदश महामार्याः स्वास्थ्य-लाभमितिः द्विनवतिः दशमलव द्वि-शून्यमिता विद्यते। सम्प्रति स्वास्थ्य-लाभप्राप्तवतां सङ्ख्या सङ्क्रमितानामपेक्षया पञ्चदश गुणिता विद्यते। स्वास्थ्य-मन्त्रालयानुसारेण अनुदिनम् आरोग्यप्राप्तवतां समाधमान-सङ्ख्याधारेण मृत्युमतिः सङ्क्रमितानाञ्च सङ्ख्या सततम्

अपचीयते। केन्द्रीय-स्वास्थ्य-मन्त्रालयेन कोविड-महामारीं निध्याय विदेशेभ्यः प्रत्यगतेभ्यः यात्रिभ्यः नूतन-दिङ्-निर्देशाः प्रख्यापिताः सन्ति। सर्वैरपि निर्धारित-यात्रायाः न्यूनातिन्यूनम् अहोरात्र-त्रय-पूर्वं सम्बद्ध-स्वास्थ्य-केन्द्रे उपस्थातव्यम् अथ च वेब -फलकमाध्यामेन स्वघोषणा पत्रं प्रदातव्यम्।

आई.पी.एल.- आई.पी.एल. क्रिकेटस्पर्धामालिकायां गतरात्रौ क्रीडिता स्पर्धा मुम्बई-इण्डियन्स् दलेन विजिता। प्रथमं क्रीडयता मुम्बई-इण्डियन्स्-दलेन पञ्च क्रीडकाणां हानौ निर्धारित-क्षेपचक्रेषु द्विशतं धावनाङ्काः समधिगताः। लक्ष्यमनुसरता दिल्ली कौपिटल्स् दलेन अष्टक्रीडकाणां हानौ केवलं त्रिचत्वारिंशदुत्तरैकशतं धावनाङ्काः एव समधिगताः। रोमाञ्चक-स्पर्धायां दिल्ली कैपिटल्स् दलं पराजित्य मुम्बई-इण्डियन्स् दलं निर्णायकचक्रे प्रविष्टम्। शृङ्खलायामद्य रॉयल-चैलेन्जर्य-बङ्गलुरुदलं सन् राइजर्यहैदराबद-दलं सम्मुखीकरिष्यति।

## इति वार्ताः